# Document Information

Text title : shiva nIrAjanam
File name : shivanIrAjana.itx
Category : AratI
Location : doc_shiva
Author : Traditional
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : Sunder Hattangadi sunderh at hotmail.com
Proofread by : Sunder Hattangadi sunderh at hotmail.com
Description-comments : From shivananda site, possible he is the author
Latest update : October 30, 2008
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ श्रीशिव नीराञ्जनम् ॥

## ॥ श्रीशिव नीराञ्जनम् ॥

हरिः ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुवाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥ १॥

ॐ जय गङ्गाधर हर शिव, जय गिरिजाधीश शिव, जय
गौरीनाथ ।
त्वं मां पालय नित्यं, त्वं मां पालय शम्भो, कृपया जगदीश ।
ॐ हर हर हर महादेव ॥ २॥

कैलासे गिरिशिखरे कल्पद्रुमविपिने, शिव कल्पद्रुमविपिने
गुञ्जति मधुकर पुञ्जे, गुञ्जति मधुकरपुञ्जे गहने ।
कोकिलः कूजति खेलति, हंसावलिललिता रचयति
कलाकलापं रचयति, कलाकलापं नृत्यति मुदसहिता ।
ॐ हर हर हर महादेव ॥ ३॥

तस्मिँल्ललितसुदेशे शालामणिरचिता, शिव शालामपिरचिता,
तन्मध्ये हरनिकटे तन्मध्ये हरनिकटे, गौरी मुदसहिता ।
क्रीडां रचयति भूषां रञ्जितनिजमीशम्, शिव रञ्जितनिजमीशं
इन्द्रादिकसुरसेवित ब्रह्मादिकसुरसेवित, प्रणमति ते शीर्षम्,
ॐ हर हर हर महादेव ॥ ४॥

विबुधवधूर्बहु नृत्यति हृदये मुदसहिता, शिव हृदये मुदसहिता,
किन्नरगानं कुरुते किन्नरगानं कुरुते, सप्तस्वर सहिता ।
धिनकत थै थै धिनकत मृदङ्गं वादयते, शिव
मृदङ्गं वादयते,
क्वणक्वपलिलिता वेणुं मधुरं नादयते ।
ॐ हर हर हर महादेव ॥ ५॥

कण कण-चरणे रचयति नूपुरमुज्वलितं, शिवनूपुरमुज्वलितं.
चक्राकारं भ्रमयति चक्राकारं भ्रमयति, कुरुते तां धिकताम् ।
तां तां लुप-चुप तालं नादयते, शिव तालं नादयते,

अङ्गुष्ठाङ्गुलिनादं अङ्गुष्ठाङ्गुलिनादं लास्यकतां कुरुते ।
ॐ हर हर हर महादेव ॥ ६॥

कर्पुरद्युतिगौरं पञ्चाननसहितम्, शिव पञ्चाननसहितं,
विनयन शशधरमौले, विनयन विषधरमौले कण्ठयुतम् ।
सुन्दरजटाकलापं पावकयुत फालम्, शिव पावकशशिफालं,
डमरुत्रिशूलपिनाकं डमरुत्रिशूलपिनाकं करधृतनृकपालम् ।
ॐ हर हर हर महादेव ॥ ७॥

शङ्खनिनादं कृत्वा झल्लरि नादयते, शिव झल्लरि नादयते,
नीराजयते ब्रह्मा, नीराजयते विष्णुर्वेद-ऋचं पठते ।
इति मृदुचरणसरोजं हृदि कमले धृत्वा, शिव हृदि कमले धृत्वा
अवलोकयति महेशं, शिवलोकयति सुरेशं, ईशं अभिनत्वा ।
ॐ हर हर महादेव ॥ ८॥

रुण्डै रचयति मालां पन्नगमुपवीतं, शिव पन्नगमुपवीतं,
वामविभागे गिरिजा, वामविभागे गौरी, रूपं अतिललितम् ।
सुन्दरसकलशरीरे कृतभस्माभरणं, शिव कृत भस्माभरणम्,
इति वृषभध्वजरूपं, हर-शिव-शङ्कर-रूपं तापत्रयहरणम् ।
ॐ हर हर हर महादेव ॥ ९॥

ध्यानं आरतिसमये हृदये इति कृत्वा, शिव हृदये इति कृत्वा,
रामं त्रिजटानाथं, शम्भुं विजटानाथं ईशं अभिनत्वा ।
सङ्गीतमेवं प्रतिदिनपठनं यः कुरुते, शिव पठनं यः कुरुते,
शिवसायुज्यं गच्छति, हरसायुज्यं गच्छति, भक्त्या यः श्रृणुते ।
ॐ हर हर हर महादेव ॥ १०॥

ॐ जय गङ्गाधर हर शिव, जय गिरिजाधीश शिव, जय
गौरीनाथ ।
त्वं मां पालय नित्यं त्वं मां पालय शम्भो कृपया जगदीश ।
ॐ हर हर हर महादेव ॥ ११॥

This can be sung in traditional Hindi Aratis, like OM jaya jagadIsha hare.

Encoded and proofread by Sunder Hattangadi sunderh@hotmail.com